॥ श्रीः ॥

# ॥ अंशावेशावतारवर्णनम् ॥

श्रीमन्नारायणपण्डिताचार्यविरचितं टिप्पणसहितम्।

इदं पुस्तकं कुंभघोणनिवासिना,

रा. सुदर्शनशर्मणा, साहित्यशिरोमणिना,

यथामति संशोध्य

कुंभघोणस्थ "श्रीविद्या" मुद्राक्षरशालायाम् मुद्रापयित्वा प्रकाशितम्।



सन् १९३५.

मूल्यं ०-२-० ]  [प्रेषणव्ययः पृथक्.

N.B.—Apply to :—R. S. Sam[illegible] 14, Venkata Row's Street, Kumbakonam.

॥ श्रीः ॥ हरिः ॐ ॥

# ॥ अंशावेशावतारवर्णनम् ॥

१० नत्वा विष्णुं प्रवक्ष्यामि अंशावेशावतारणम् । देवदानवदैत्यानां गन्धर्वोरग- वर्णनम्.
१॥ रक्षसाम् ॥१॥ अकारादि क्षकारान्तं प्रोच्यते च पृथक् पृथक् । अर्जुनः पूर्वमेवेन्द्रो
हरिर्वायुनरांशयुक् ॥२॥ अश्वत्थामा नीलकण्ठो ब्रह्मशापात्पराजितः । अक्रूरस्तु १.
किशोरः प्राक् ब्रह्मा स्वायंभुवांशकः ॥३॥ अंबा सा भीष्मभार्यैव पूर्वं नाम्ना २.
वरांगिनी । आरुणी विदुरस्त्रीतु शूराच्छूद्रयामिहाऽभवत् ॥४॥ अनिरुद्धः, कृष्णपौत्रः,
प्रद्युम्नाद्योऽजनिष्ट हि । पूर्वमप्यनिरुद्धाख्यो, विष्णोस्तन्नाम्न एव च ३. ॥५॥ नंददंशी-
ह्यजगरस्स तु विद्याधरः स्मृतः । द्वितीयोऽजगरो यस्तु स राजा नहुषः पुरा ॥६॥
अंगदः-चंद्रमाः पूर्वं इन्द्रावेशी हरिप्रियः । अभिमन्युर्बुधःप्रोक्तः चंद्रशक्रा ४. श्विनों- ॥१॥
शयुक् ॥७॥ अञ्जना हनुमन्माता ह्यप्सरा पुञ्जकस्थळी । ५. इरावान्मंगलांशस्तु वरुणा-

वेशसंयुतः ॥८॥ उद्धवश्चोपगोःपुत्रः स तु पूर्वं बृहस्पतिः । पवनावेशसंयुक्तः कृष्ण-
भक्तो विशेषतः ॥९॥ उग्रसेनश्चोग्रसेनगंधर्वः समुदाहृतः । जरासन्धस्य पुत्री च शल्यस्य
च तथाऽऽत्मजा ॥१०॥ उभे अप्याश्विभार्योषा सा पूर्वं तु द्विरंशका । उत्तमौजार्य-
मावेशयुक्तश्चैव परावसुः ॥११॥ क्रथश्च कैशिकश्चैवाप्यग्निपुत्रौ पुरा स्मृतौ । कृतवर्मा
च हार्दिक्यो हृदिकस्य च पुत्रकः ॥१२॥ शुक्लपक्षाभिमानी च पाञ्चजन्यांशचोदि-
तः । प्रवहाख्यस्य मरुतोप्यंशयुक्तो महाबलः ॥१३॥ कर्णः सूर्यः समाख्यातः
सन्निधानयुतो हरेः । (६) सहस्रवर्मनाम्ना च ह्याविष्टो नरकेण च ॥१४॥ कृपाचार्यः
पुरा प्रोक्तो विष्कंभो नाम रुद्रकः । कुन्तिभोजः कूर्मनाममरुदंशयुतः सदा ॥१५॥
द्रोणपत्नी कृपी तारा पूर्वं भार्या बृहस्पतेः । कुंती पूर्वं पाण्डुभार्या (७) कुशःप्रोक्तः
पुरन्दरः । १६॥ कबन्धो दनुगन्धर्वः कुबेरः कथ्थनः कपिः । वानरः केसरी नामा
ध्रुवो नाम मरुत्स्मृतः ॥१७॥ भ्रातरः पञ्चकैकेयाः विश्वेदेवाः स्मृतास्तु ते । काली
पूर्वं भीमभार्या भारती सा प्रकीर्तिता ॥१८॥ कीटः पूर्वं हेतिरक्षः कर्णस्योरु विदार-

कः। शापाच्छचीपतेस्तस्य कीटत्वं समुपागतम् ॥१९॥ केशी नामाऽसुरः पूर्वं हयग्रीवो महासुरः। निष्ठो नामा दितेःपुत्रः वरिष्ठो दानवेश्वरः ॥२०॥ कुञ्जरत्वमगाद्दैत्यः कंसस्य च स वाहनः। कंसः पूर्वं कालनेमिः विजयः कुंभकर्णकः ॥२१॥ काकः पूर्वं जयन्तश्च ८. किशोरो बाण नामकः। कृष्णपुत्रास्तु सर्वेऽपि देवांशा इति विश्रुताः ॥२२॥ गदः कृष्णानुजः पूर्वं चण्डको ९. गण उच्यते। गाधी पुरंदरः प्रोक्तो गोप्यश्चाप्सरसःस्त्रियः ॥२३॥ गजोनामा कपिःप्राणो गवाक्षोऽपाननामकः गवयो व्यनननामासा वुदानो वृष उच्यते। गन्धमादः समानस्तु गोपालास्तु सुरांशकाः ॥२४॥ घटोत्कचो भीमसुतो हिडिम्ब्यां यो व्यजायत। स पूर्वं निर्ऋतिर्नामा रुद्रावेशयुतो बली ॥२५॥ चित्रसेनो धार्तराष्ट्रः स पूर्वं खरराक्षसः। चित्रांगदा पार्थभार्या वीरसेनसुता शची ॥२६॥ चान्द्रिका भीम भार्या या भारती सा प्रकीर्तिता। चेकितानः पुरा प्रोक्तः प्रवहो नाम वै मरुत् ॥२७॥ चारुदेष्ण कृष्णसुतः स तु पूर्वं विनायकः। १०. वराहश्च किशोरश्च जातौ चाणूरमुष्टिकौ ॥२८॥

द्रुपदस्य च यः पुत्रो जनमेजय ईरितः। स तु चित्ररथो नाम गंधर्वः त्वष्टुरं-
शकः। ऋक्षजातिर्जाम्बवांस्तु ब्रह्मपुत्रो यमःस्मृतः ॥२९॥ अरुणस्य सुतः प्रोक्तो
जटायुर्नाम पक्षिराट्। जरासन्धो विप्रचित्तिः जराव्याधो भृगुस्स्मृतः। डिभिकः
कैटभःप्रोक्तो ह्यादिदैत्यो महाबलः ॥३०॥ ताटका चाप्सराः प्रोक्ता त्रिवक्रा पिंगला
पुरा। तक्षकश्चाश्वसेनश्च, ११. तारः पूर्वं बृहस्पतिः ॥३१॥ १२. तारा पूर्वं शची
प्रोक्ता १३. त्रिशिखश्च विभुर्यमौ। द्रौपदी भारती प्रोक्ता श्यामलोपादिभिर्युता ॥३२॥
देवकी त्वदितिः प्रोक्ता दुर्वासा रुद्र उच्यते। द्रोणो बृहस्पतिः प्रोक्तो ब्रह्मावेशी
सदैव सः ॥३३॥ देवकोप्याहुकसुतो गन्धर्वो मुनिरुच्यते। दमघोषो दनुर्नाम गन्धर्वः
प्रागुदाहृतः ॥३४॥ द्रुपदश्च पुरा प्रोक्तः स हूहूर्नाम गायकः। विरिञ्चेरावहाख्यस्य
मरुतोंशयुतो बली ॥३५॥ देवकी शिशुपालस्य पुत्री सा श्यामला स्मृता। राजा दुश-
रथः पूर्वं मनुः स्वायंभुवः स्मृतः ॥३६॥ उक्तं पद्मपुराणे तु अवतारप्रसङ्गतः। दन्त-
वक्रो जयाविष्टः ! विडूरथ इति स्मृतः ॥३७॥ दुर्योधनः कलिः ब्रह्मवाय्वोरावेश-

॥श्री ह्रीं ॐ॥

अंशा० ॥३॥ युक्सदा । दुश्शासनः पुरा प्रोक्तश्चेन्द्रजिन्नाम राक्षसः ॥३८॥ मृषाऽभिमानिनी, पूर्वं सा प्रजायत दुश्शला । द्वारकावासिनस्सर्वे देवांशा इति विश्रुताः ॥३९॥ निर्ऋतिर्नाम दिक्पालो दुर्मुखो नाम वानरः । धर्मराजो यमः पूर्वं धृष्टद्युम्नस्तथाऽनलः ॥४०॥ धृतराष्ट्रः पुरा प्रोक्तो गन्धर्वस्तु सनामकः । बलवान् व्यासवरतो वायोरावेशयुक्सदा ॥४१॥ धृष्टकेतुः शैशुपालिः अनुह्लादः स उच्यते । नन्दगोपः पुरा द्रोणो नीलोनाम कपि(१४) हरिः ॥४२॥ नकुलस्सहदेवश्च नासत्यौ संप्रकीर्तितौ । द्वितीयः क्रोधनो दैत्यो नकुलो मखदूषकः ॥४३॥ विश्वकर्मा, नलो नाम कपिः पूर्वमुदाहृतः । प्रद्युम्नः काम उद्दिष्टः पाण्डुः १५. पारावहो मरुत् ॥४४॥ पञ्च पार्थसुताः प्रोक्ताः विश्वेदेवाः पुरातनाः । (१६.) पुरोचनः प्रहस्तस्तु पौण्ड्रको वेन उच्यते ॥४५॥ पूतना चोर्वशी युक्ता ताटका सा प्रकीर्तिता । पार्वती नकुलस्त्री या नाम्ना पूर्वं तिलोत्तमा ॥४६॥ वसूनामंशसंभूतः पनसो नाम वानरः । प्रतिविंध्यो धर्मसुतो विश्वेदेवः प्रकीर्तितः ॥४७॥ बलभद्रः पुरा शेषः शुक्लकेशांशयुक्सदा । बाह्लीकराजा प्रह्लादो



"वायोरावेशयुक्च सः" । बभ्रुवाहोऽर्जुनसुतो जयंतो मदनांशकः ॥४८॥ गोवत्समध्यगं
कृष्णं बकोनाम महासुरः । बकरूपेण तं हंतुं उद्युक्तस्स यदूत्तमम् ॥४९॥ भीमसेनः
पुरावायुर्विष्ण्वावेशी महाबलः। भीष्मकस्तु शुचिर्नाम वह्निपुत्रः प्रकीर्तितः ॥५०॥
ब्रह्मावेशी च राहोश्च भागो मित्रांशसंयुतः । भूरिस्त्वजैकपाद्रुद्रो भगदत्तो धनाधिपः
॥५१॥ चक्राभिमानी भरतो रामसेवासमुत्सुकः । सत्यभामासुतो भानुः १७. सविता
रविभास्वरः ॥५२॥ माद्री पूर्वं पाण्डुभार्या १८. मंत्रद्युम्नः पुरन्दरः । १९. महाभिषक्च
मंडूको द्वावेतौ वरुणौ स्मृतौ ॥५३॥ मंथरा त्वप्सराः पूर्वं साऽलक्ष्मीः परिकीर्तिता। युधि-
ष्ठिरो यमः पूर्वं वायोरावेशसंयुतः॥५४॥ युधामन्युः २०. पार्षतस्तु ब्रह्मावेशयुतो बली ।
स तु विश्वावसुर्नाम गंधर्वः समुदाहृतः ॥५५॥ युयुत्सुःनिर्ऋतिर्नाम नासिक्यो मरुदुच्य-
ते। यशोदापि धरादेवी मणिमानेकलव्यकः ॥५६॥ रुक्मिणी सा रमा प्रोक्ता रोहिणी
सुरभिः स्मृता । रुक्मिपुत्री रुक्मवती कामभार्या रतिस्स्मृता ॥५७॥ रुक्मीति चेल्वलो
नाम जयाविष्टो हि रावणः । लवश्चाग्निः पुरा प्रोक्तो रामपुत्रः प्रतापवान् ॥५८॥



लक्ष्मणः शेष उद्दिष्टः स तु संकर्षणांशकः । दौर्योधनी लक्षणा या सांबस्त्री सा
रतिः स्मृता ॥५९॥ विराटस्तु हाहानामा गायको ब्रह्मणः पुरा । विवहाख्यस्य
मरुतोप्यंशयुक्तो महामतिः ॥६०॥ वसुदेवः कश्यपः प्राक् विदुरो यम उच्यते ।
विशोकः पिंगलायां तु कृष्णाज्जातो महाबलः ॥६१॥ नारदस्य च शिष्यस्तु स वै
भीमस्य सारथिः । वाली चेन्द्रः पुरा प्रोक्तो विराधस्तुंबुरुः स्मृतः ॥६२॥ विविद-
श्चापि मैन्दश्च नासत्यौ संप्रकीर्तितौ । असुरावेशतस्तौ तु न राममनुजग्मतुः ॥६३॥
वृत्रासुरः चित्रकेतुः विकर्णो ह्यतिकायकः । अरिष्टोनाम दैत्योऽभूत् गोकुले वृषभाऽ-
सुरः ॥६४॥ वृषो नाम कपिः पूर्वं उदानो मरुदुच्यते । विभीषणः कुबेरस्य सेनापति-
रुदाहृतः ॥६५॥ स वै पूर्वं कण्वनामा वायोः शापादभूदृषिः । वीरसेनः त्वष्टुरंशः
श्वशुरोप्यर्जुनस्य तु ॥६६॥ विपृथुः सौम्यनामा वै मरुदंशयुतस्सदा । विकुक्षिरिन्द्र-
स्संप्रोक्तः स वै तु हरिपार्षदः ॥६७॥ वारुणी बलरामस्त्री रेवती संप्रकीर्तिता । वाय-
सस्तु जयंतः प्राक् जराव्याधो भृगुस्स्मृतः ॥६८॥ विष्वक्सेनो वायुजस्तु खेन तुल्यः

प्रकीर्तितः । शंतनुर्वरुणः पूर्वं शल्यः संह्लाद उच्यते ॥६९॥ शिखंडी भीष्मभार्या या पूर्वं नाम्ना वरांगिनी । शलः पूर्वं (२१) विरूपाक्षः शबरी चाप्सराः स्मृता ॥७०॥ सृगालवासुदेवस्य पुत्रो यः शक्रदेवकः । स पूर्वं माणिभद्राख्यः शिवपार्षद उच्यते । शतबालिः पनसश्चैव कपी वस्वंशसंभवौ ॥७१॥ शंखात्मकस्तु शत्रुघ्नः शैब्यश्च ऋभुदेवता । शर्वत्रातो भीमसुतस्समानो वायुरुच्यते ।७३॥ शुकोनाम महायोगी व्यासपुत्रःशिवः स्मृतः । शुकमाता शुकीप्रोक्ता घृताची नाम चाप्सराः ॥७४॥ शिशुपालो जयाविष्टो रावण परिकीर्तितः । श्वेतसंपातिनामानौ वानरौ मारुतौ स्मृतौ ॥७५॥ शरभः कपिरुद्दिष्टः पर्जन्यो नाम देवता । सृगालवासुदेवस्तु धुंधुर्नाम 'महासुरः ॥७६॥ शठोल्मुकौ २२. बलसुतौ प्रख्यातावर्यमांशकौ । श्रुतायुर्वारुणः पुत्रो विप्रशापादजायत ॥७७॥ प्रतिविन्ध्यः श्रुतसेनः श्रुतकीर्तिः श्रुतायुधः । श्रुतानीकस्तु पंचैते विश्वेदेवाः प्रकीर्तिताः ॥७८॥ षण्मुखः काम उद्दिष्टः कार्तिकेयो महाबलः । सांबो जाम्बवतीपुत्रो ब्रह्मावेशी स षण्मुखः ॥७९॥ (२३) सैन्धवः कालकेयश्च दानवः परि-

॥श्रीहरि॥

अंशा० ॥५॥ कीर्तितः। सोमदत्तस्तु बाह्लीकात्स रुद्रः पत्रतापकः ॥८०॥ संजयस्तुंबुरुर्नाम गंधर्व- वर्णनम्.
पतिरुच्यते। साल्वो (२४.) बलिर्नाम दैत्यो बाल्याद्विष्णुवराज्जयी ॥८१॥ सात्यकिस्तु
पुरा प्रोक्तस्संवहो मरुद्देशकः। गरुत्मतोप्यंशयुक्तः कृष्णपक्षाभिमानिकः ॥८२॥
तथा चक्राभिमानी च शिष्यः कृष्णकिरीटिनोः। (२५.) सैरंध्री पिंगला पूर्वं
रमावेशयुता क्वचित् ॥८३॥ सुषेणो वरुणः पूर्वं सुदामा पुष्पबंधकः। अरुणस्य सुतः
प्रोक्तः संपातिर्नाम पक्षिराट् ॥८४॥ कंसानुजः सुनीथश्च वृषो नामाऽसुरः पुरा।
मित्रः प्रोक्तः *सत्यजित्तु सुग्रीवः सूर्य उच्यते ॥८५॥ सुभद्रा त्रिजटा प्रोक्ता स्कन्दः
षण्मुख उच्यते। सहदेवो जरासंधसुतोऽसौ पत्रतापकः ॥८६॥ संपातिश्चैव श्वेतश्च
वानरौ मरुतौ स्मृतौ। इति विष्णुपुराणोक्तमवतारप्रसंगतः ॥८७॥ हनुमान्वायु-
रुद्दिष्टो रामकार्यधुरंधरः। हिडिंबी भीमभार्या, या राक्षसी कामरूपिणी ॥८८॥
अपरा शक्रभार्या सा भारत्यावेशसंयुता। (२६.) हरिव्रतः कल्किपिता मनुः स्वायंभुव- ॥५॥
स्त्वति ॥८९॥ उक्तं रुद्रेण पार्वत्यै पुराणे ब्राह्मसंज्ञके। हिरण्यकशिपुश्चैव हिरण्या-

क्षस्तथैव च। जयश्च विजयश्चैतौ पूर्वतो द्वारपालकौ ॥९०॥ हंसश्च डिंभिकश्चैव विख्यातौ मधुकैटभौ। क्षत्ता तु विदुरः प्रोक्तस्स तु पूर्वं यमांशकः ॥९१॥ इत्थमंशावतरणं देवदानवरक्षसाम्। कृतं नारायणाख्येन प्रीयतां कमलापतिः ॥९२॥

॥ इति श्रीमत्कविकुलतिलकश्रीमत्त्रिविक्रमपण्डिताचार्यसुत श्रीमन्नारायणपण्डिताचार्यविरचितं अंशावेशावतारवर्णनम् संपूर्णम् ॥

॥ श्रीकृष्णार्पणमस्तु ॥

## ॥ विषमपदार्थविवरणम् ॥

१. किशोरनामा गन्धर्वः. २. अष्टमस्यन्ध्रुवसोर्भार्या. ३. आवेशयुक्त इति शेषः. ४. अश्विनोंशयुक्. सन्धिरार्षः उपलक्षणमिदं धर्मवाय्वंशयुक्च ५. अर्जुनान्नागकन्यायां जातः ६. सहस्रवर्मनामकासुरेण. ७. कुशः-रामपुत्रः. ८. किशोरः-तन्नामा गन्धर्वः वाणासुरः. ९. चण्डकनामा विष्णुपार्षदः. १०. तन्नामकौ राक्षसौ. ११. तारः-वानरः. १२. तारा-वालिभार्या. १३. त्रिशिखो विभुरित्युभौ चतुर्थपञ्चममन्वंतरेंद्रौ यमौ

अश्विनौ १४. हरिः-अग्निरितिशब्दरत्नावलिः. १५. परावहएव पारावहः स्वार्थे अण्. १६. पुरोचनः. दुर्योधनमन्त्रीम्लेच्छः-प्रहस्तः-रावणसेनाधिपतिः. १७. सविता-सूर्यांशः १८. मंत्रद्युम्नः-षष्ठे मन्वंतरे इन्द्रस्य मंत्रद्रुतस्यैव नामांतरम्. १९. महाभिषक्-राजा सएव द्वितीये जन्मनि शंतनुः. मंडूकः-मांडूकोपनिषद्द्रष्टा भेकः. २०. पार्षतः-द्रुपद-पुत्रः. २१. विरूपाक्षः-एकादशरुद्रेष्वन्यतमः. २२. बलसुतौ बलरामपुत्रौ. २३. सैंधवः-जयद्रथः. २४. बलिः-बल्याविष्टः बलिनामाऽसुरः. बाल्यात्-बलिचक्रवर्तिसंबंधिनः. २५. सैरंध्री-श्रीकृष्णाय गन्धदात्री त्रिवक्रा. *सत्यजित्-द्रुपदपुत्रः. २६. हरिव्रतः-कल्किपितुः विष्णुयशस एव नामांतरम् ॥

॥ इति विषमपदार्थविवरणम् समाप्तम् ॥

माध्वोपयोगिग्रन्थाः—१. श्रीमद्यमकभारतम्. यादुपत्यव्याख्यानसहितम्. १-४-० २. हरिश्चन्द्रोपाख्यानम्. श्रीमन्महाभारतवनपर्वान्तर्गतम्. १-८-०. ३. श्रीमदणुभाष्यं पदार्थदीपिकाव्याख्यानसहितम् कन्नडार्थसहितञ्च. ०-६-०. ॥